# ॥ अथ गायत्री पंचांग-
# प्रारंभः ।









# अथ गायत्रीपञ्चांगस्थविषयानुक्रमः ।









ॐ सत्यंशिरसि

सांख्यायनगोत्रम्
ॐ भूर्भुवः स्वः परमात्मा.

ब्रह्म

ॐ तपः

ॐ जनः

ॐ अग्निः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| त | म | धी | स्य | व | दे | र्गो | भ |
| त्स | हि | रो | प | दे | व | त् | ण्यं |
| वि | धि | र | ज | सः | सा | या | रे |
| तु | यो | यो | नः | प्र | चो | द | वे |

ॐ स्वः

विष्णुः

ॐ भूः पादयोः

ॐ भुवः

ॐ ऐं ह्रीं श्रीं बालां
ॐ महः नाभौ.

ॐ कुकुजंघयोः

ॐ स्वः पुच्छे



॥ ॐ तत्पूर्वस्याम् ॥

॥ ॐ तपः उत्तरस्याम् ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| र्व ५ | स्य १३ | प्र २१ | से | ज | नः २० | व १२ | तु ४ |
| रे ६ | धी १४ | चो २२ | सा | र | यो १९ | दे ११ | वि ३ |
| शि | व | स्थि | स | क्तः | श | के | वः |
| वो | लः | तो | दा | मु | या | यः | शि |
| जी | शि | जी | शि | श | शु | जी | वः |
| वः | वः | वः | वः | पा | य | न | शि |
| णि ७ | म १५ | द २३ | व | रो | यो १८ | र्गो १० | त्स २ |
| यं ८ | हि १६ | यात् २४ | दों | प | धि १७ | भ ९ | त १ |

॥ ॐ भूः दक्षिणस्याम् ॥

॥ ॐ स्वः पश्चिमस्याम् ॥

## ॥ अथगायत्री चक्रम् ॥

| अक्षर | ऋषि | छन्द | देवता | वर्ण | तत्त्व | शक्ति | मुद्रा | कला | फलानि | पापहर फलम् | तकारान्ताःपादाग्र्योः |
|---|---|---|---|---|---|---|---|---|---|---|---|
| त | वसिष्ठः | गायत्री | अग्निः | पीत | पृथ्वी | ब्राह्मी | सुमुखं | तपनी | आयुष्यम् | अज्ञान दोषहरम् | ॐ तकारं पादांगुष्ठे |
| स | भरद्वाजः | उष्णिक् | वायुः | श्याम | अप् | गौरी | सम्पुटम् | सकला | आरोग्यम् | उपपातक हरम् | ॐ सकारं गुल्फे |
| वि | गौतमः | अनुष्टुप् | सूर्यः | श्वेत | तेज | प्रभा | वितलं | विश्वा | ऐश्वर्यदम् | महापातक हरम् | ॐ विकारं जंघयोः |
| तु | विश्वामित्रः | बृहती | विद्युत् | नील | वायु | नित्या | विस्तीर्णं | तुष्टा | धनदम् | दुष्टग्रहदोषहरम् | ॐ तुकारं जान्वोः |
| र्व | भृगुः | पङ्क्तिः | यमः | वह्निः | आकाश | विश्वा | एकमुखं | वरदा | कामदम् | भ्रूणहत्यादोषहरम् | ॐ र्वकारं ऊर्वोः |
| रे | शांडिल्यः | त्रिष्टुप् | वरुणः | अतिशुभ्र | गंधः | भद्रा | द्विमुखं | रेवती | विद्यादम् | अगम्यागमनहरम् | ॐ रेकारं गुदे |
| णि | लोहितः | व्यक्ति | बृहस्पतिः | हरितम् | रसः | विलासिनी | त्रिमुखम् | सूक्ष्मा | कामदम् | अभक्ष्यभक्षहरम् | ॐ णिकारं लिंगे |
| यं | गर्गः | कान्तिः | पर्जन्यः | अतिपीतं | रूपं | विमला | चतुर्मुखं | ज्ञाना | धनदम् | पुरुषहत्याहरम् | ॐ यंकारं कट्यां |
| भ | शातातपः | बृहती | इन्द्रः | ताम्र | स्पर्शः | काली | पंचमुखं | भर्गा | सन्ततिदम् | गोहत्या हरम् | ॐ भकारं नाभौ |
| र्गो | सनत्कुमारः | सत्या | गन्धर्वः | रक्तम् | [illegible] | [illegible] | षण्मुखं | गोमती | [illegible]दम् | स्त्रीहत्याहरम् | ॐ र्गोकारं [illegible] |
| दे | शुनःशेफः | पङ्क्तिः | त्वष्टा | श्यामः | वाक् | कान्ता | अधोमुखं | दर्विका | इष्टकन्यादम् | एनसदोषहरम् | ॐ देकारं स्तनयोः |
| व | भार्गवः | विराट् | मैत्रावरुणि | पीतम् | पाणिः | शान्ता | शकटम् | धरा | कान्तिदम् | [illegible]रादोषहरम् | ॐ वकारं हृदये |
| स्य | पाराशरः | विश्वाट् | पौष्णः | विद्युत् | चरणः | दुर्गा | यमपाशं | सिद्धांता | चिन्तितसिद्धिदं | पितृमातृदोषहरम् | ॐ स्यकारं कण्ठे |
| धी | पुण्डरीकः | विस्तार पंक्तिः | सुरेशः | शुभ्रम् | उपस्थ | सरस्वती | ग्रथितम् | ध्योनां | कीर्तिदायकम् | पूर्वजनितपापहरम् | ॐ धीकारं मुखे |
| म | कुत्सः | कात्यायनी | मरुत् | रक्तः | वायुः | विद्युद्वर्णी | उन्मुखोन्मुखम् | मर्यादा | सौभाग्यदम् | सर्वपाप हरम् | ॐ मकारं तालुदेशे |
| हि | दक्षः | पङ्क्तिः | सौम्यः | नीलम् | श्रोत्रम् | विशाला | प्रलंबम् | स्फुटा | अभीष्टसिद्धिदम् | प्रतिग्रहदोष हरम् | ॐ हिकारं नासाग्रे |
| धि | कश्यपः | त्रिष्टुप् | अंगिराः | रक्तः | त्वचा | विभूति | मुष्टिकं | बुद्धिः | त्रैलोक्यमोहनदं | प्रायरुचक्षेपहरम् | ॐ धिकारं नेत्रयोः |
| यो | जमदग्निः | जगती | विश्वेदेवाः | रुक्मसदृशम् | चक्षुः | कमला | मत्स्यः | योगमातरः | पराश्रयपदम् | मनःसर्वपापहरम् | ॐ योकारं भ्रुवोर्मध्ये |
| यो | आत्रेयः | महाजगती | अश्विनौ | उद्यत्सूर्यनिभः | जिह्वा | कखा | कूर्मः | योगांतरा | देवप्रतिग्रहदोषहृत् | इन्द्रपद प्राप्तिः | ॐ योकारं ललाटे |
| नः | विष्णुः | महिम्नी | प्रजापतिः | श्वेतम् | नासिका | पाप्मा | वराहकं | पृथ्वी | त्रैलोक्यदम् | विष्णु प्राप्तिः | ॐ नःकारं पूर्वमुखे |
| प्र | अंगिराः | नृमती | कुबेरः | रोचनाभः | मनः | अचला | सिंहाक्रांतं | प्रभवा | परानुग्रहक्षमं | रुद्रपद प्राप्तिः | ॐ प्रकारं दक्षिणमुखे |
| चो | कुमारः | पृच्छंद | शंकरः | चंद्रसदृशं | अहंकारः | परा | महाक्रांतं | उष्मा | तेजसोतिशयदं | ब्रह्मपद प्राप्तिः | ॐ चोकारं पश्चिममुखे |
| द | मृगशृंगः | सुधा | ब्रह्मा | पीतः | बुद्धिः | सुशीला | मुद्गरम् | दिव्यासना | स्वर्गप्रदम् | सायुज्यपद प्राप्तिः | ॐ दकारं [illegible]मुखे |
| यात् | भगः | | विष्णुः | शुभ्रवर्णः | गुदा | वज्रहृया | पल्लवं | निरंजन | स्वर्गलोकप्रदम् | सर्वव्यापि | ॐ यात्कारं मूर्ध्नि |

## ॥ अथ श्लोकाः ॥

प्रणवपूर्वं समुद्धृत्य व्याहृत्या सप्तभिस्तथा ॥ चतुर्विंशतिगायत्र्या द्विरावृत्योपवीतकम् ॥१॥ ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम् ॥ रुद्रेण दीयते ग्रंथिः सावित्र्या चाभिमंत्रितम् ॥ २॥
श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रंथकोटिषु ॥ परोपकारः पुण्याय पापाय परपीडनम् ॥ ३॥ तयादचोप्रनः योयोधिहिमधीस्यवदेर्गोभर्यंणिरेर्वतुवित्सत ॥ शिवः शिवः शिवो जीवो न जीवः केवलः शिवः पशुपाश स्थिती जीवः पाशमुक्तः सदाशिवः ॥ ४ ॥ वसिष्ठशापमोचनं हुं फट् स्वाहा उपसंहार मुद्रा प्रदर्शनम् ॥ प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुताम् ॥ अन्त्योकार समायुक्तां मन्यंते मुनयः पराम् ॥ ५॥ तदाद्यं च तदाद्यं च कुर्यात् प्रणवसंयुतम् ॥ अद्यांतरिक्षतां कुर्य्यादिति पाराशरोब्रवीदिति ॥ येन वांछंति संतानं मोक्षमिच्छंति केवलम् ॥ ६॥ प्रत्योंकारमसौ कुर्वन्नक्षरं मोक्षमाप्नुयात् ॥७॥ गृहे जपं समं विद्या द्गोष्ठे शतगुणं भवेत् ॥ नद्यां शतसहस्रं स्यादनंतं शिवसान्निधौ ॥ ८॥ अग्रे पृष्ठे तथा वामे समीपे गर्भमंदिरे ॥ जपं प्रदक्षिणं होमं न कुर्यान्न शिवालये ॥९॥ शिवमध्ये जपं कुर्य्यादथवा तीर्थमध्यतः यजमानो जापकश्च षण्मासं नैव जीवतीति ॥१०॥

तकारं सर्वव्यापि ॥



॥ श्रीगणेशाय नमः ॥ अथ गायत्रीपुरश्चरणविधिरुच्यते ॥ ॥ तत्र पुरश्चरणं नाम मंत्रफलसिद्ध्यर्थमुपोद्घातत्वेन पूर्वसेवनम् ॥ अन्यच्च॥ पूजात्रैकालिकी नित्यं जपस्तर्पणमेव च॥होमं ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यत इति ॥कुलार्णवे ॥ पंचांगानि महादेवि जपो होमश्च तर्पणम् ॥ अभिषेकश्च विप्राणामाराधनमपीश्वरि ॥ पूर्वपूर्वदशांशेन पुरश्चरणमुच्यत इति ॥ ॥ पुरश्चरणस्थानानि ॥ विश्वामित्रकल्पे ॥ पर्वताग्रे नदीतीरे बिल्वमूले जलाशये ॥ गोष्ठे देवालयेऽश्वत्थे उद्याने तुलसी

वने॥पुण्यक्षेत्रे गुरोः पार्श्वे चित्तैकाग्रस्थलेऽपि च॥
पुरश्चरणकृन्मंत्रीसिध्यत्येव न संशय इति ॥ ॥पुर
श्चरणं कर्त्तुं योगतासिद्ध्यर्थं देहशुद्धिप्रकारमाह॥
विश्वामित्रः ॥ आत्मनः शोधनार्थाय लक्षत्रयं
जपेद्बुधः ॥ अथवाप्यष्टलक्षं तु गायत्रीं श्रुतिचो
दिताम् ॥ चतुर्विंशतिलक्षं वा याज्ञवल्क्यमतं
यथेति ॥ अथवा नद्यादितीर्थे सर्वप्रायश्चित्तवि
धिना षडब्दं त्र्यब्दंसार्धाब्दं वा यथाशक्ति कृच्छ्र
चांद्रायणादि सर्वप्रायश्चित्तं कृत्वा पुरश्चरणं कुर्या
दिति ॥ ॥ अथान्नशुद्धिप्रकारः ॥ विश्वामित्र

कल्पे ॥ अयाचितोञ्छशुक्लश्च भिक्षावृत्तिचतुष्ट
यम् ॥ तांत्रिकैर्वैदिकैश्चैव अन्नशुद्धिः प्रकीर्तिता॥
अन्नानुसारिकर्माणिबुद्धिःकर्मानुसारतः॥तत्र तपो
युक्तेन तापसेन क्षत्रियवैश्यशूद्रादीनामन्नं न ग्राह्य
म् ॥ पललस्पर्शमात्रेण तपो दहतिनिश्चितमित्यु
क्तेः ॥ भिक्षान्नं शुद्धमानीय कृत्वाभागचतुष्टयम्॥
एकभागो द्विजार्थाय गोग्रासाय द्वितीयकः॥आ
तिथ्याय तृतीयश्च तुरीयस्तु स्वकीयक इति ॥
ग्रासप्रमाणं तत्संख्या च तत्रैव ॥ कुक्कुटांडप्रमाणं
तु ग्रासमानं विधीयते ॥ ह्यष्टौ ग्रासा गृहस्थस्य

वानप्रस्थस्तदर्धकम् ॥ ब्रह्मचारी यथेष्टं च गोमूत्र विधिपूर्वकम् ॥ प्राक्षणं नववारं स्यात्षड्वारं च त्रि वारकम् ॥ अच्छिद्रं च करं कृत्वा सावित्रीं च त दित्यृचम् ॥ मंत्रमुच्चार्य मनसा उक्तमार्गेण प्रोक्षये दिति ॥ ॥ आहारनियमस्तत्रैव ॥ अशक्तो वापि शक्तोवा आहारे नियते कृते ॥ षण्मासे तस्य सिद्धिः स्याद्गुरुभक्तिरतः सदा ॥ एकाहं पंचगव्याशी ह्येकाहं मारुताशनः ॥ एकाहं ब्राह्मणान्नाशी गायत्रीजप कर्मणीति ॥ मतांतरे ॥ स्नात्वा तु शतगायत्र्या शतमंत्रजले जपेत् ॥ शतेनापस्ततः पीत्वा सर्व

पापैः प्रमुच्यते॥चांद्रायणादिकृच्छ्रस्य फलंप्राप्नो
ति निश्चितमिति॥यदा लोकेषणा त्यक्तुं न शक्य
ते तदर्थोऽयं विधिरुच्यते॥क्षीराहारी फलाशी वा
शाकाशीवाहविष्यभुक् ॥ भिक्षाशीवाजपेद्यत्तत्कृ
च्छ्रचांद्रसमं भवेदिति ॥ वर्ज्याहारस्तत्रैव ॥ लव
णं क्षारमाम्लं च गृंजनादिनिषेधितम्॥तांबूलं च
द्विभुक्तिश्च दुष्टवासं प्रमत्तताम्॥श्रुतिस्मृतिविरोधं
च जपं रात्रौ विवर्जयेत् ॥ श्राद्धादेरनुरोधेन जपं
यदि त्यजेन्नरः॥स भवेद्देवताद्रोही पितॄन्सप्त नये
दध इति ॥ अथ नित्यानुष्ठेयधर्मास्तत्रैव॥ भूशा

य्या ब्रह्मचारित्वं मौनचर्यास्तथैव च ॥ नित्यं
त्रिषवणं स्नानं क्षुद्रकर्म विवर्जनम् ॥नित्यपूजा
नित्यदानमानंदस्तुतिकीर्तनम् ॥ नैमित्तिकार्चनं
चैव विश्वासो गुरुदेवयोः ॥ जपनिष्ठा द्वादशैते
धर्माः स्युर्मंत्रसिद्धिदाः॥नित्यंसूर्यमुपस्थाय तस्य
चाभिमुखो जपेत्॥ देवताप्रतिमादौ वा वह्नौ वा
भ्यर्च्य तन्मुखः ॥ स्नानपूजाजपध्यानहोमतर्पण
तत्परः॥निष्कामो देवतायां च सर्वकर्मनिवेदकः॥
एवमादींश्च नियमान्पुरश्चरणकृच्चरेदिति ॥ ॥ पु
रश्चरणारंभे वर्ज्यमासादि तत्रैव ॥ ज्येष्ठाषाढौ

भाद्रपदं पौषं तु मलमासकम् ॥ अंगारशनिवारौ तु व्यतिपातं च वैधृतिम्॥ अष्टमीं नवमीं षष्ठीं चतुर्थीं च त्रयोदशीम् ॥ चतुर्दशीममावास्यां प्रदोषं च तथा निशि॥ यमाग्निरुद्रसार्पेंद्रवसुश्रवणजन्मभम्॥ मेषकर्कतुलाकुंभमकरालिकलग्नकम्॥ सर्वाण्येतानि वर्ज्याणि पुरश्चरणकर्मणि॥ संध्यागर्जितनिर्घोषभूकंपोल्कानिपातने ॥ एतानन्यांश्च दिवसान्स्मृत्युक्तांश्च परित्यजेदिति ॥ ॥ पुरश्चरणकालः ॥ ॥ रुद्रयामले ॥ वैशाखे श्रावणे वापि आश्विने कार्तिके तथा॥ फाल्गुने मार्गशीर्षे वा मंत्री

कुर्यात्पुरस्क्रियाम् ॥ ॥ तिथ्यादिनिर्णयः चांद्रिका
याम्॥ पूर्णिमा पंचमी चैव द्वितीया सप्तमी तथा॥
त्रयोदशी च दशमीप्रशस्ता सर्वकर्मस्विति॥ रुद्र
यामले॥ गुरुशुक्रोदये शुद्धे लग्ने सद्वारशोधिते॥
चंद्रतारानुकूल्ये च शुक्लपक्षे विशेषतः॥ पुरश्चरण
कं कुर्यान्मंत्रसिद्धिः प्रजायत इति॥ ॥ जपस्था
नानि॥ नारदीये॥ शिवस्य सन्निधाने च सूर्याग्न्यो
र्वा गुरोरपि॥ दीपस्य ज्वलितस्यापि जपकर्म प्रश
स्यते॥ गृहे जपं समं विद्याद्गोष्ठे शतगुणं भवेत ॥
नद्यां शतसहस्रंस्यादनंतं शिवसन्निधौ॥ समुद्रती

रे च ह्रदे गिरौ देवालयेषु च ॥ पुण्याश्रमेषु सर्वेषु
जपःकोटिगुणोभवेदित्युक्तस्थानानामन्यतमंस्था
नमाश्रित्य दीपस्थानं विचिंतयेत् ॥तद्यथा॥कूर्म
स्यैव मुखंविद्धि दीपस्थानं सुसिद्धिदम् ॥चतुरस्रं
भुवं भित्त्वा कोष्ठानां नवकं लिखेत्॥पूर्वकोष्ठादि
विलिखेत्सप्तवर्गान्यनुक्रमात् ॥ लक्षावीशे मध्य
कोष्ठे स्वरान्युग्मक्रमाल्लिखेत्॥दिक्षुपूर्वादितोयत्र
नामस्याद्यक्षरंभवेत् ॥ मुखं तदास्यजानीयाद्धस्ता
वुभयतःस्थितौ॥ पृष्ठं कुक्षी उभे पादौ द्वौ शीर्षं
पुच्छमीरितम् ॥ कूर्मचक्रमिदं प्रोक्तं मंत्राणां

सिद्धिसाधनमिति ॥ कुरुक्षेत्रे प्रयागे च गंगा सागरसंगमे॥ महाकाले च काश्यां च कूर्मस्थानं न चिंतयेदिति ॥ ॥ अथासनानि ॥ शारदायाम् ॥ कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ स्यात्पौष्टिकं च कौशेयं शांतिकं वेत्रविष्टरम् ॥ वंशासने व्याधिनाशः कंबले दुःखमोचनम्॥ सर्वाभावेत्वासनार्थं कुशविष्टरमिष्यत इति ॥ ॥ जपमाला तत्रैव॥ रुद्राक्षः श्वेतपद्माक्षमाले तु अखिले जपेत ॥ अतिस्थूलोतिसूक्ष्मश्च स्फुटितोभंगुरस्तिंदुः॥ भिन्नः पुरा धृतो जीर्णो रुद्राक्षो वर्ज्यः

स्मृतः॥ अष्टोत्तरशतैर्माला प्रशस्ता सर्वकर्मसु ॥ गुरुं प्रकाशयेद्धीमान्मंत्रं नैव प्रकाशयेत् ॥ अथ मालां च मुद्रां च गुरोरपि न दर्शयेदिति॥ ॥ मालासंस्कारस्तत्रैव ॥ क्षालयेत्पंचगव्येन सद्योजातेन तज्जलैः ॥ चंदनागरुगंधाद्यैर्वामदेवेन घर्षयेत् ॥ धूपयेत्तामघोरेण लेपयेत्पुरुषेण तु ॥ मंत्रयेत्पंचमेनैव प्रत्येकं तु शतं शतम् ॥ मेरुं च पंचमेनैव तथा मंत्रेण मंत्रयेत् ॥ येन प्रतिष्ठिता माला तमेव तु मनुं जपेदिति ॥ ॥ जपप्रकारः॥ विश्वामित्रकल्पे ॥ ॐकारं पूर्वमुच्चार्य भूर्भुवः

स्वस्तथैव च॥गायत्रीं प्रणवांतां च मध्ये त्रिप्रणवां तथा ॥ एवं नित्यं जपं कुर्याद्ब्राह्मणो विप्रपुंगवः॥ भिन्नपादा तु गायत्री ब्रह्महत्याप्रणाशिनी ॥ अभिन्नपादागायत्री ब्रह्महत्यांप्रयच्छति॥अच्छिन्नपादगायत्रीजपं कुर्वंति ये द्विजाः ॥ अधोमुखाश्चतिष्ठंति कल्पकोटिशतानि च ॥ धर्मशास्त्रपुराणेषु इतिहासेषु सुव्रत ॥ पंचप्रणवसंयुक्तां जपेदित्यनुशासनम् ॥ जपसंख्याष्टभागान्ते पादो जाप्यस्तुरीयकः ॥ स द्विजः परमो ज्ञेयः परं सायुज्यमाप्नुयात ॥ अन्यथा [illegible] स जपो

विफलो भवेत्॥प्रारंभादिनमारभ्य समाप्तिदिवसा
वधि॥न न्यूनं नातिरिक्तं च जपं कुर्याद्दिनेदिने॥
नैरंतर्येण कुर्वीत स्वस्ववृत्तिं न लिंपयेत्॥प्रातरार
भ्य विधिवज्जपेन्मध्यंदिनावधि॥मनःसंहरणं शौ
चं यानं मंत्रार्थचिंतनमिति॥ ॥ जपसंख्या
तत्रैव॥गायत्रीछन्दोमंत्रस्य यथासंख्याक्षराणि
च ॥ तावल्लक्षाणि कर्त्तव्यं पुरश्चरणकं तथेति
॥ ॥ प्रपंचसारेपि ॥ एवं कृत्वा तु सिद्ध्यर्थं गा
यत्रीं दीक्षितो जपेत् ॥ तत्त्वलक्षं विधानेन भि-
क्षाशी विजितेंद्रिय इति ॥ ॥ होमद्रव्याणि

तत्संख्या च शारदायाम् ॥ क्षीरोदनं तिला दूर्वाः क्षीरद्रुमसमिद्वरान् ॥ पृथक्सहस्रत्रितयं जुहुयान्मंत्रसिद्धय इति ॥ विश्वामित्रेपि ॥ तिलैः पत्रैःप्रसूनैश्च यवैश्च मधुनाप्लुतैः॥कुर्याद्दशांशतो होमं ततः सिद्धो भवेन्मनुरिति ॥ अत्र दशांशत स्तर्पणं दशांशहोम इत्यर्थः ॥ होमात्पूर्वं तर्पण स्योक्तत्वात् ॥ होमार्थं मंडपकुंडादिनिर्णयस्तद्र चनाप्रकारश्च तत्तद्ग्रंथेभ्योऽवगंतव्यः ॥ विस्तर भयान्नेह लिखितः ॥ ॥ ॥ ॥

श्रीगणेशाय नमः ॥ अथ विश्वामित्रकृतगायत्री
कल्पप्रारंभः ॥ स्वगुरुं पूजयेन्नित्यमुपचारैस्तु पं
चकैः ॥ भक्तिश्रद्धानुसारेण विश्वामित्रं प्रकल्पये
त् ॥ १ ॥ अस्य कृत्स्नस्य मंत्रस्य प्राणायामं नि
रुंधयेत् ॥ प्राणायामं नियम्याशु गुरुपूजापुरः
सरम् ॥ २ ॥ प्रातरुत्थाय यो विप्रः शयने पर्यव
स्थितः ॥ एकाग्रमानसो भूत्वा ध्यायेन्मूलेऽथ
कुंडलीम् ॥ ३ ॥ नाभिसंनिहिता ज्ञेया द्वात्रिंश
द्वर्णसंख्यया ॥ एवं ज्ञात्वा प्रभातायां षडाधारं त
था न्यसेत् ॥ ४ ॥ षडाधारं तथा वक्ष्ये विन्यसेच्च

गा.

८

तुरक्षरम् ॥आद्यंतप्रणवैर्युक्तं षट्कुक्षिस्तु ततोन्य

सेत् ॥ ५ ॥ सहस्रदलमध्यस्थां सबालां सगुरौ

यके ॥ हंसहंसेति विज्ञानात्संकल्पध्यानपूर्वकम्

॥ ६ ॥ अस्याः संकल्पमात्रेण सर्वपापैः प्रमुच्य

ते ॥ ततोत्थाय बहिर्गम्य मलमूत्रविसर्जनम् ॥

॥७॥ दुर्गंधत्यागपर्यन्तं कृत्वा शौचं समाहितः ॥

ततो नदीं समागम्य गंगाध्यानपुरःसरम् ॥ ८ ॥

आचमनत्रयं कृत्वा त्रिवारं स्नानमाचरेत् ॥

अग्निमंडलमालिख्य जलमध्ये सबिंदुकम् ॥माया

बीजेन मध्यस्थमुभयोर्व्याहृतित्रयम् ॥ ९ ॥

वि.

१

८

ततः शुद्धाम्बुनाचम्य प्राणायामत्रयं कुरु ॥ देश
कालार्थमुच्चार्य्य गायत्रीध्यानपूर्वकम् ॥ १० ॥
सूक्ताग्निमार्जनंकुर्याद्यथाशाखोक्तमार्गतः ॥ अ
घमर्षणमंत्रं च स्नानं पंचांगपूर्वकम् ॥११॥ श्रोत्रे
नासाक्षि रुद्ध्वा च सहस्रांतं जले वपुः ॥मग्नं कुर्य्या
ज्जपेन्मंत्रं कुर्याद्वायुनिरोधनम् ॥ १२ ॥ ततः
स्नानत्रयं कुर्याच्छिरोव्याहृतिपूर्वकम् ॥ त्रिवा
रं त्रिविधं स्नानं पायुमेढ्रं शिरःस्तनम् ॥ १३ ॥ प्रो
क्षयेच्छंखमुद्राभिर्व्याहृत्यादिशिरोन्तकम् ॥ तत
स्तीरं समागत्य गायत्रीकवचं पठेत् ॥ १४ ॥ शु

चिवस्त्रांगमाश्रित्य ललाटे तिलकं तथा ॥ ओमा
पो ज्योतिर्मंत्रेण शिखाबंधनमाचरेत् ॥ १५ ॥
त्रिकोणमध्ये ह्रींकारं कोणान्ते प्रपदं तथा॥ दंडेषु
व्याहृतिश्चैव मुल्लिखेदुदकं तथा ॥ १६ ॥ प्रणवे
न बहिर्जप्त्वा जलं पीत्वा च मार्जनम् ॥ न तत्र वि
न्यसेत्संध्यामन्यथा शूद्रवद्भवेत् ॥ १७ ॥ इति
श्रीविश्वामित्रकल्प आह्निकलक्षणयोगो नाम प्र
थमः परिच्छेदः ॥ १ ॥ ॥ चतुर्विंशतिनामानितत्त
त्स्थानेषु विन्यसेत् ॥ केशवादीनि विन्यस्य पौरा
णाचमनं जपेत् ॥ १ ॥ चतुर्विंशतिवर्णानां केशवा

दिरनुक्रमात् ॥ देव्याः पादैस्त्रिभिः पीत्वा चांगुलै
र्नवभिः स्पृशेत् ॥ २ ॥ सप्तव्याहृतिगायत्री
शिरस्तुर्यद्वयं न्यसेत् ॥ श्रुतिस्मृतिविधाने
न द्विविधं परिकल्पयेत् ॥ ३ ॥ तृतीयं मूलमंत्रेण
क्रमाद्वर्णानि विन्यसेत् ॥ आचमनविधिः प्रो
क्तः पौराणः स्मार्त्तआगमः ॥४॥ श्रौतं मानसमाच
म्य पंचभिः श्रुतिचोदितैः ॥ संध्याप्रारंभकाले
त्वाचमनत्रितयं न्यसेत् ॥ ५ ॥ कुरुते सर्वसिद्धिः
स्यान्नास्ति चेन्निष्फलं भवेत् ॥ संहतांगुलिना तो
यं ब्रह्मतीर्थैं पिबेज्जलम् ॥ मुक्तांगुष्ठकनिष्ठायांशेषै

गा, णाचमनं भवेत् ॥ ६ ॥ गोकर्णाकृतिहस्तेन माष वि.
१० मात्रं जलं पिबेत् ॥ न्यूनातिरिक्तमात्रेण तज्जलं १
सुरया समम् ॥७॥ आदौ चांते तथा मध्ये न्यसे
च्चाचमनं क्रमात् ॥श्रुतिस्मृतिपुराणानि पर्यायेण
विलोमतः ॥ ८ ॥ केशवादित्रिभिर्नाम अपः पी
त्वा यथाविधि ॥ गोविंदमग्रतो न्यस्य विष्णुं सु
षुम्नि विन्यसेत् ॥ ९ ॥ मधुसूदनमादित्यं शुद्धां
शुञ्च त्रिविक्रमम् ॥अग्रतो वामनञ्चैव हस्तयोः श्री
धरं तथा ॥ १० ॥ हृषीकेशं पद्मनाभमुभयोः १०
पादयोर्न्यसेत् ॥ दामोदरं ब्रह्मरंध्रे नासा संकर्षण

स्य च॥११॥ नासामध्ये तु विन्यस्य नासांते वा
विनिर्द्दिशेत्॥ दक्षनासान्तु विन्यस्य वासुदेवं तथै
व च॥१२॥ प्रद्युम्नं च तथा वामे अनिरुद्धं च दक्षि
णे॥ पुरुषोत्तमं वामनेत्रे दक्षिणे च अधोक्षजम्॥
॥१३॥ नारसिंहं वामनेत्रे नाभौ चाप्यच्युतं न्य
सेत्॥ जनार्दनं हृदि न्यस्य भुजे दक्षिणबाहुके॥
॥१४॥इति विश्वामित्रकल्प आचमनयोगो नाम
द्वितीयः परिच्छेदः ॥२॥ प्राणायामत्रयेणैव प्रातः
संध्यां समाचरेत् ॥ प्राणायामसमायुक्तं प्राणाया
ममिति स्मृतम्॥१॥ उत्तमं नवधा चैव मध्यमं

ऋतुसंख्यया ॥ अधमं त्रयमित्याहुः प्राणाया
मो विधीयते ॥ २ ॥ सप्तव्याहृतिभिश्चैव प्राणा
यामं पुटीकृतम्॥व्याहृत्यादिशिरोंतं च प्राणाया
मत्रयत्रिकम्॥ ३ ॥ सव्याहृति सप्रणवां गायत्रीं
शिरसा सह ॥ त्रिः पठेदायतः प्राणान्प्राणायामः
स उच्यते॥४॥बिंदुतः प्राणमार्गे च गायत्रीं बिंदुसं
युताम् ॥ व्याहृत्यादिशिरोंतं च प्राणायामत्रयत्रि
कम्॥५॥ आदौ कुंभकमाश्रित्यरेचपूरकवर्जितम्
व्याहृत्यादिशिरोंतं च प्राणायामं तु कुंभकम ॥
॥६॥प्राणायाममसमानाबिंदुमहितं बिन्दुत्रयं संयुतं

सप्तव्याहृतिबिंदुसंपुटपरं वेदादिपादत्रयम् ॥
गायत्रीं शिरसा त्रिनाडिसहितामीड्यहृदये हृ परे
शुद्धं केवलकुंभकं प्रतिदिनं ध्यायामितत्त्वंपदम्॥
॥७॥अधमे द्वादशी मात्रा मध्यमे द्विगुणा मता॥
उत्तमा त्रिगुणा प्रोक्ता प्राणायामं निरुंधयेत् ॥८॥
रेचकं कुंभकं चैव पूरकं वायुरोधनम्॥एवं क्रमेण
युंजीत प्राणायामस्य लक्षणम् ॥९॥ निषिद्धं रेचकं
ज्ञेयं पूरकं च तथैव च॥अमोघं कुंभकं प्रोक्तं प्राणा
यामं प्रकीर्तितम् ॥ १० ॥ अघोषनिर्घोषगमा
गमस्थं नाडीद्वयं रेचकपूरकं च ॥ कुंभोपमं पू

गा. र्णघटप्रकारं ह्येवंविधं स्याच्छ्वसनस्य साध्यम् ॥ वि.

१२ ॥११॥ शब्दपूर्वकमभ्यासं शब्दव्यंजनसंयुतम् ॥ १

भिन्नभांडोदकं यद्वच्छ्वसनस्य व्यतिक्रमात् ॥

॥१२॥ इडापिंगलासुषुम्नाच्छब्दपूर्वव्यतिक्रमात् ॥

तत्सर्वं निष्फलं प्रोक्तमिति शंकरभाषितम् ॥१३॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥

ततो धर्मं समाश्रित्य प्राणायामविदो विदुः ॥१४॥

नासापुटं त्वंगुलीभिः पंचभिर्वायुरोधनम् ॥ शनैः १२

शनैस्तु निःशब्दं प्राणायामं निरोधयेत् ॥ १५ ॥

नासिकापुटमंगुल्या निधायैकेन मारुतम् ॥ आ

कृष्य धारयेदग्निं प्राणायामं विचिंतयेत् ॥ १६ ॥
प्राणायामेन ज्ञात्वा च स्नापयेच्चिन्मयं शिवम् ॥
तदादौ मानसं कुर्य्यात्तदा केवलकुंभकम् ॥१७॥
पंच प्रजालकं चैव प्राणायामं समाचरेत॥पूजामा
नससंयुक्तं प्राणायामफलं भवेत् ॥ १८ पंचपूजां
विना येन प्राणायामं करोति यः॥तस्य निष्फलितं
कर्म विश्वामित्रेण भाषितम्॥१९॥लकारंचहकारं
च यंकारं चरकारयोः ॥ चकारमितिविख्यातं पं
चपूजात्मकं जपेत् ॥ २० ॥ सिद्धासनसमो ना
स्ति न कुंभेनैव लोपमम्॥मंदहृष्टिसमोनास्तिप्रा

णायामं समभ्यसेत् ॥ २१॥ अंतश्चेतो बहिश्चक्षुर
धःस्थाप्य सुखासनम्॥समत्वं च शरीरस्य प्राणा
यामं समभ्यसेत ॥२२॥ अस्त्रप्रयोगकाले तु प्रा
णायामं च लंबकः ॥ प्राणायामबलोपेत उपसंहा
रकारकः ॥ २३ ॥ तस्मात्सर्वप्रयत्नेन प्राणाया
मं समाचरेत् ॥सर्वधर्मपरित्यागी स महापातकी
भवेत॥ २४ ॥ इति विश्वामित्रकल्पे प्राणायाम
योगो नाम तृतीयः परिच्छेदः॥ ३ ॥ पादंपादं
क्षिपेन्मूर्ध्नि प्रतिप्रवणसंपुटम् ॥ निक्षिपेदष्टपादं तु
अधो यस्य क्षयाय च॥ १॥ अष्टाक्षरं नवपदं प

दादौ ब्रह्महा भवेत्॥ऋचादौ मार्जनं कुर्य्यात्सो
श्वमेधफलं लभेत्॥२॥यस्य क्षयाय पादं तु आपः
सिंधुत्वमेव च ॥ भूमौ पादौ विनिःक्षिप्य इतरन्मू
र्ध्नि विन्यसेत् ॥ ३ ॥ प्रातःसूर्यश्चमंत्रेण सायम
ग्निः पिबेज्जलम्॥आपः पुनंतु मध्याह्ने क्रमेणाच
मनं न्यसेत् ॥ ४ ॥ आपोहिष्ठेति मंत्रेण नवपादं
द्विवारकम् ॥ हिरण्यवर्णाश्चत्वारो दधिमंत्रद्वि
वारकम् ॥ ५॥ पदादौ क्लीं पदं मध्ये पदांते मार्जनं
भवेत्॥ऋचादौ प्रणवं चोक्त्वा ऋचोंते मार्जनं भ
वेत्॥६॥ सत्त्वं रजस्तमो जातं मनोवाक्कायिका

दिषु ॥ जाग्रत्स्वप्नसुषुप्त्यादिनवैतान्नवभिर्दहे
त् ॥७॥ दधिद्विमार्ज्जनं चैव हिरण्यादिचतुष्टयम्॥
कामक्रोधादिषड्वर्गं मार्ज्जयेत्सर्वमार्ज्जनम् ॥ ८ ॥
इति श्रीविश्वामित्रकल्पे मार्ज्जनयोगो नाम
चतुर्थः परिच्छेदः ॥ ४ ॥ संध्यावंदनवेलायामर्घ्यं
दद्यात्त्रयं बुधः ॥ सायं प्रातः समानं स्यान्म
ध्याह्ने च पृथग्विधिः ॥ १ ॥ एकं मध्याह्नकाले तु
सायं प्रातस्त्रयस्त्रयः॥एवं ज्ञात्वा सृजेदर्घ्यं सूर्यनक्ष
त्रपूर्वकम् ॥२॥ एकं शस्त्रास्त्रनाशाय एकं हननना
शने असुराणां वधायार्घ्यं प्रायश्चित्तार्थसंयुतम्३॥

दद्यात्केवलगायत्र्या मूढो ह्यर्घ्यं तु यो द्विजः ॥
सबिन्दुब्राह्मणोनाम सर्वधर्मबहिष्कृतः॥४॥ ब्रह्मा
स्त्रं नाभिजानाति स विप्रःशूद्र एव हि॥तस्य कर्मा
दिकं जातं धर्माद्यं निष्फलं भवेत् ॥५॥बीजमंत्रेण
गायत्र्याः प्रणवेत्यभिधीयते ॥ ६ ॥ देहस्तु दंड
इत्युक्तः संज्ञाकवचमेव हि ॥ सर्वांगानि पदो मंत्रं
सर्वमंत्रे त्वयं विधिः ॥ ७ ॥ अस्त्राष्टवारतः प्रोक्ता
गायत्री व्याप्य उच्यते ॥ एतत्षणमंत्रकं ज्ञात्वा
अर्घ्यं दद्याद्द्वि नामतः ॥८॥ एकं मध्याह्नकाले च
प्रायश्चित्तं द्वितीयकम् ॥ अर्घ्यद्वयं तु मध्याह्ने

तथा मुक्तं महामुने ॥९॥ अर्घ्यत्रयं प्रयोगार्थं प्रा
यश्चित्तं चतुर्थकम् ॥ सायं प्रातर्द्विजादीनामेवमे
व विधिः क्रमात् ॥१०॥ ब्रह्मास्त्रं ब्रह्मदंडं च ब्रह्म
शीर्षं च संयुतम्॥अर्घ्यत्रयं प्रयोगार्थमेवमेव मुदा
हृतम् ॥ ११ ॥ शस्त्रमादौ ततो दंडं शिखास्त्रीणि
समुच्चरेत्॥पर्यायेण त्रिरुच्चार्य्य मंजलिं च त्रिधा
हरेत् ॥१२ ॥ अर्घ्यत्रयं प्रयोक्तव्यमभिमंत्रित
मंजलिम् ॥ त्रियुक्तं विसृजेदर्घ्यमसुराणां वधाय
च ॥१३॥ अस्त्रदंडशिरोयुक्तमर्घ्यमेकं समुच्चरेत्॥
अस्त्रं ... ॥ १४ ॥

प्रायश्चित्तं द्वितीयार्घ्यमसुराणां वधाय च ॥
प्रदक्षिणं पृथिव्यां च सर्वपापैः प्रमुच्यते ॥१५॥
असावादित्यमंत्रेण ब्रह्मेत्यादि प्रदक्षिणम् ॥
आपोभिरयुतं कार्यं सर्वाघौघनिकृंतनम् ॥ १६ ॥
हंसहंसेतिमंत्रस्य बृहत्यंतं समुच्चरन् ॥ शिरसा
दंडमस्त्रं च सन्मुखे इव निक्षिपेत् ॥१७॥ उपमंत्रं
समुच्चार्य्य शिरस्तत्र समुद्धरेत ॥ अर्घ्यमेकं तु म
ध्याह्ने तथा मुक्तं महामुने ॥१८॥ तर्जन्यंगुष्ठया
गेन राजसी मुद्रिका भवेत् ॥ राक्षसीमुद्रिकादत्तं
तत्तोयं रुधिरं भवेत् ॥१९॥ निक्षिपेद्यदिमूढात्मा

गा. रौरवं नरकं व्रजेत् ॥ अंगुष्ठच्छायापतितं देवता वि०
१६ मुद्रिका भवेत् ॥ २० ॥ देवतामुद्रिकादत्ते सर्वैःपापैः १
प्रमुच्यते ॥ एवं विज्ञानमात्रेण सद्यः सिद्धिर्भवि
ष्यति ॥ २१ ॥ इति श्रीविश्वामित्रकल्पेऽर्घ्यदा
नयोगोनामपंचमः परिच्छेदः ॥ ५ ॥ ॥ ओमित्येका
क्षरं चोक्तं न्यासध्यानपुरःसरम् ॥ यथाशक्ति जपं
कुर्य्यान्नित्यकर्म समाचरेत् ॥ १ ॥ शुचिर्भू
मौ लिखेद्यंत्रं बीजं बिंदुसमन्वितम् ॥ बीजराजं
लिखेन्मध्ये वह्निमंडलमध्यगे ॥ २ ॥ चतुरस्रं १६
ततो हस्तं सुदृढं मृदु निर्मलम् ॥ तत्रोपरिसमा

सीनो गायत्रीजपमाचरेत् ॥ ३ ॥ खशुद्धिं भूत शुद्धिं च कृत्वा शोषणदाहनम्॥ प्लवने च ततः कुर्यात्प्रणवादित्रयं क्षरैः ॥ ४ ॥ प्राणायामसमायुक्त अंतर्बाह्यं समातृकात् ॥ देहे न्यासं ततः कुर्यात्करांगन्यासमाचरेत् ॥ ५ ॥ ऋषिं न्यसेत्पूर्वमुखे तथा च्छन्द उदीरितम् ॥ देवता हृदि विन्यस्य गुह्ये बीजमिति स्मृतम्॥ ६॥ शक्तिं विन्यस्य चाधारे पादयोः कीलकं न्यसेत् ॥ एवं न्यासविधिं कृत्वा ऋष्यादिन्यासपूर्वकम् ॥ ७॥ आवाहनादि भेदं च दश मुद्राःप्रदर्शयेत्॥ आयातु वरदा देवीअं

गप्रत्यंगसंगमे ॥८॥ प्रातर्गायत्री सावित्री मध्याह्ने
च सरस्वती ॥एवमावाहनं ज्ञात्वा संध्यायां जपमा
चरेत्॥९॥हस्ताभ्यामनुलोमेन आवाहनमनाहुते।
नामत्रयमृषिश्छंदः क्रमेणावाहनं भवेत् ॥ १० ॥
मूलाधारेण गायत्री सावित्री मणिपूरके ॥ द्वाद
शारे सरस्वती छंदो नाडीत्रयं तथा ॥११॥ ऋषि
मूर्ध्नि सुविज्ञेय आवाहनमनुक्रमात् ॥ आवाहनं
यथोक्तं च यथोक्तं तु विसर्ज्जनम् ॥ १२ ॥ एवं
जानीहि विप्रेन्द्र जपध्यानंसमाचरेत् ॥आवाहनं
ततो न्यासं विना जाप्यं तु निष्फलम् ॥१३॥ च

तुर्विंशतिगायत्रीं प्रातःस्नात्वा जपेन्मनुम् ॥ प्रा
णायामं ततः कुर्यान्न्यासध्यानं समाचरेत् ॥१४॥
करन्यासं ततः कुर्यादंगन्यासं तथैवच ॥ चतुश्चतु
श्चतुष्कं च चतुश्चतुश्चतुश्चतुः ॥१५॥ षडंगं विन्य
सेद्देवीं गायत्रीं वेदमातरम् ॥ व्याहृतित्रयमुच्चा
र्य अनुलोमं च बिभ्रतः ॥ १६ ॥ करांगन्यासमा
रभ्य गायत्री पूर्ववद्भवेत् ॥ अकारं च उकारं च म
कारं बिंदुसंयुतम् ॥ १७॥ अनुलोमं न्यसेत्तत्र त्रि
रक्षरसमन्वितम् ॥ चतुर्विंशतिवर्णानां पल्लवोऽय
मुदाहृतः ॥ १८ ॥ चतुरक्षरसंयुक्तं करांगन्या

समाचरेत् ॥ तूर्यपादं विना न्यासमाद्यंतं प्रणवै

सह ॥ १९ ॥ व्याहृतित्रयमुच्चार्य चतुरक्षरसंयु

तम् ॥ पुनर्व्याहृतिमुच्चार्य करांगन्यासमाचरेत्

॥ २० ॥ पादंपादं द्विपादं च प्रातिप्रणवसंपुटम् ॥

करांगन्याससंयोगात्षड्भागैस्त्रिपदा भवेत् ॥

॥ २१ ॥ अंगुष्ठादिचतुर्वर्णामनुलोमक्रमेण तु ॥

हृदयादिचतुर्वर्णाः क्रमेणैव विलोमतः ॥ २२ ॥

चतुर्वर्णान्विना यस्तान्विपर्णं संन्यसेद्द्विजः ॥

तस्य वैफल्यमाप्नोति सत्यंसत्यं न संशयः ॥२३॥

अंगन्यासं करन्यासं देहन्यासं विना जपेत् ॥ अं

धत्वं बधिरत्वं च मूकत्वं प्राप्नुयान्मनुः ॥ २४ ॥
इति श्रीविश्वामित्रकल्पे आवाहनादियोगोनाम
षष्ठः परिच्छेदः॥६॥ ध्यानं मुद्रां नमस्कारं गुरुमंत्रं
तथैव च ॥ संयोगमात्मसिद्धिञ्च पञ्चधैवं विभा
वयेत् ॥ १ ॥ प्रातः केवलगायत्री मध्याह्ने व्या
हृतीयुता ॥ सायाह्ने तूर्यया युक्ता नित्यजाप्यं स
माचरेत् ॥ २ ॥ पादादौ रेफसंयुक्ता गायत्रीजप
लक्षणम् ॥३॥ पादत्रयं समुच्चार्य प्रतिलोमं ततश्च
रेत् ॥ रेफबिंदू तदाद्यन्तौ गायत्रीजपमाचरेत् ॥
॥ ४ ॥ गायत्रीं पूर्वमुच्चार्य्य तुर्य्यांत्यादिविलोम

तः ॥ सायंसंध्यां जपेदेवं साधकः सर्वसिद्धये ॥
॥ ५ ॥ तकारादियकारांतमनुलोमं विलोमतः ॥
तुर्यपादं विना मंत्रं प्रातःसंध्यामथाचरेत् ॥ ६ ॥
भकारादिहिकारांतं मध्यपादमिति स्मृतम् ॥
तार्तीयं तु प्रयोक्तव्यं तदर्घ्यं प्रथमं भवेत् ॥ ७ ॥
धकारादियकारांतं तृतीयं पादमुच्चरेत् ॥ प्रथमं
च द्वितीयं च त्रिविधं जपलक्षणम् ॥८॥ कालत्रयं
त्रिधा जाप्यं त्रिकालं त्रिविधं स्मृतम् ॥ अनुलो
मविलोमाभ्यां चिरं सिद्धिमवाप्नुयात् ॥९॥ च
तुर्विंशतिवर्णानामनुलोमं जपेदपि ॥ पूर्णजाप्य

फलं नास्ति अर्द्धजाप्यफलं लभेत् ॥ १० ॥ चतु
ष्पादं तु गायत्री अनुलोमविलोमतः ॥ नित्यंजा
प्यं प्रकुर्वीत भुक्तिमुक्तिं लभेन्नरः॥११॥नित्यनैमि
त्तकाम्यादिव्यस्ताव्यस्तं जपेन्मनुम् ॥ प्रातर्म
ध्याह्नसायाह्नं जपेदेवं क्रमेण तु ॥ १२ ॥ जप
पारायणं कुर्य्यात्त्रिपदासंपुटं नव ॥ एवं ज्ञात्वा
जपेन्नित्यमेकः कोटिगुणं भवेत् ॥ १३ ॥ कालत्र
यं यथोक्तं च जाप्यपारायणं परम् ॥ अनंतफल
माप्नोति सत्यं सत्यं न संशयः ॥ १४ ॥ अष्टोत्तर
सहस्रं वा अष्टोत्तरशतं तु वा॥अष्टाविंशतिमेवाथ

गा. गायत्रीदशकं जपेत् ॥ १५ ॥ ॐकारः पुरुषश्चैव
२० गायत्री सुंदरी तथा ॥ तयोःसंयोगकाले तु वस्त्र २
माच्छाद्य गण्यते ॥१६॥ वरेण्यं विरलं चोक्का ज
पकाले विशेषतः ॥ पारायणेषु युक्तं स्यादन्यथा
विफला भवेत् ॥ १७॥ इति श्रीविश्वामित्रकल्पे
त्रिकालजपयोगो नाम सप्तमः परिच्छेदः ॥७॥
इति विश्वामित्रकृतगायत्रीकल्पः सम्पूर्णः ॥ ॥

अथ गायत्रीपद्धतिः ।

ब्रह्मविष्णुशिवाराध्यां गायत्रीं लोकपावनीम् ॥ २०
नमस्कृत्यानुरोधेनालिखेय पद्धतिं क्रमात् ॥ १ ॥

साधकःब्राह्ममुहूर्त्ते चोत्थाय यथोक्तंशौचंकृत्वान
द्यादौस्नानंकृत्वाप्राणायामत्रयंकृत्वा अघ्यांतांसं
ध्यां कुर्यात्॥प्राणायामोयथा॥ॐभूः ॐभुवः ॐ
स्वःॐ महःॐ जनःॐतपः ॐ सत्यंॐतत्सवितु
र्वरेण्यं भर्गो देवस्यधीमहि ॥ धियोयोनःप्रचोद
यात्॥आपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम्॥
प्रणवस्य ब्रह्माऋषिःगायत्रीच्छंदः परमात्मादेव
ता शरीरशुद्ध्यर्थे जपे विनियोगः ॥ ब्रह्मणे नमः
शिरसि॥गायत्रीछंदसे नमः मुखे ॥ परमात्मदेव
तायै नमः हृदये॥करसंपुटं कृत्वा समस्तदुरितक्ष

यार्थं न्यासं संकरिष्ये ॥ व्याहृतीनां जमदग्नि भरद्वाजात्रिगौतमकाश्यपविश्वामित्रवसिष्ठादि ऋषिभ्योनमः शिरसि॥सप्तार्चिरनिलसवितृप्रजापतिवरुणेंद्रविश्वेदेवदेवताभ्यो नमः मुखे ॥ गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीछंदोभ्यो नमः हृदि ॥ एवं करसंपुटं कृत्वा समस्तदुरितक्षयार्थे गायत्रीन्यासः ॥ गायत्र्या विश्वामित्र ऋषये नमः शिरसि॥ गायत्रीछंदसे नमः मुखे ॥ परमात्मदेवतायै नमःहृदये ॥ ॐ भूःनमःहृदये ॥ ॐ भुवः नमःमुखे॥ॐस्वःनमःदक्षांसे॥ॐ महः

नमः वामांसे ॥ ॐ जनः नमःदक्षिणोरौ ॥ॐतपः
नमःवामोरौ॥ॐ सत्यं नमः जठरे ॥ इतिव्याहृति
न्यासः॥ अथाक्षरन्यासः॥ॐतत् नमःगुल्फयोः॥
ॐ सं नमः पदपार्श्वयोः ॥ ॐवि नमः जान्वोः॥
ॐ तुं नमः पादमुखयोः ॥ ॐ वंनमः जंघयोः ॥
ॐ रेंनमः नाभौ ॥ॐ णिं नमःहृदये ॥ ॐ यं न
मःकंठे ॥ ॐ भं नमः हस्तयोः॥ॐ गौं नमःमणि
बंधयोः ॐ दें नमःकूर्पयोः ॥ ॐ वंनमः बाहु
मूलयोः॥ॐ स्यं नमः आस्ये ॥ ॐ धीं नमः नः
सापुटयोः ॥ ॐ मं नमः कपोलयोः॥ ॐहिंनमो

नेत्रयोः ॥ ॐ धिं नमः कर्णयोः ॥ ॐ यों नमः भ्रू
मध्ये॥ ॐ यों नमः मस्तके॥ ॐ नं नमः पश्चिम
वक्रे॥ ॐ प्रं नमः उत्तरवक्रे ॥ ॐ चा नमः दक्षिण
वक्रे ॥ ॐ दं नमः पूर्ववक्रे॥ ॐ यात् नमः उर्ध्ववक्रे ॥
इत्यक्षरन्यासः॥ अथ पदन्यासः ॥ ॐ तत् नमः
शिरसि ॥ ॐ सवितुर्नमः भ्रुवोर्मध्ये ॥ ॐ वरे
ण्यं नमः नेत्रयोः ॥ ॐ भर्गः नमः मुखे ॥ ॐ देव
स्य नमः जठरे ॥ ॐ धीमहि नमः हृदये ॥ ॐ धि
यः नमः नाभौ॥ ॐ यः नमः गुह्ये ॥ ॐ नः नमः जा
न्वोः ॥ ॐ प्रचोदयात् नमः पादयोः ॥ ॐ आपो

ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोमिति शिरसि
इति पदन्यासः॥अथ पादन्यासः॥ ॐ तत्सवितुर्व
रेण्यं नमः नाभ्यादिपादपर्यंतम् ॥ ॐ भर्गो देवस्य
धीमहि नमः हृदयादिनाभ्यंतम् ॥ ॐ धियो यो नः
प्रचोदयात् नमः मूर्धादिहृदयांतम्॥ ॐ परोरजसे
सावदोम् इति मूर्ध्नि विन्यस्य ॥ अथ षडंगन्यासः
ॐ ब्रह्मणे हृदयायनमः ॐ विष्णवे शिरसे स्वाहा॥
ॐ रुद्राय शिखायै वषट् ॥ ॐ ईश्वराय कवचाय हु
म् ॥ॐ सदाशिवाय नेत्रत्रयाय वौषट्॥ ॐ सर्वात्म
ने अस्त्राय फट्। इति मंत्रेणोर्ध्वाधस्तालत्रयं कृत्वा

गा. छोटिकमुद्रया दिग्बंधनं विधाय मूलेन व्यापकं वि.
२३ कुर्य्यात् ॥ इति षडंगम् ॥ अथ लयांगन्यासः ॥ २
ॐ अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं
अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं
तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं॥
ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीम
हि ॥ धियो यो नः प्रचोदयात् ॥ क्षं ळं हं सं षं
शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं
टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं २३
एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं तयाञ्चोप्र

नः योयोधिहिमधीस्यवदेगौंभण्यंरेर्वतुवित्स
तस्वःवः र्भुभू ॐ इति हृदयादिमुखांतम् ॥ एव
मेव हृदयादिकेशांतम् ॥ तथैव व्याप्य ॥
इति लयांगन्यासः ॥ इति विन्यस्य पाठन्यासं
कुर्य्यात् ॥ ॐ मं मंडूकाय नमः मूलाधारे ॥
ॐ कं कालाग्निरुद्राय नमः स्वाधिष्ठाने ॥ ॐ मं
मूलप्रकृत्यै नमः नाभौ ॥ ॐ आं आधारशक्त
ये नमः हृदये ॥ कं कूर्माय नमः ॥ वं वराहाय
नमः ॥ धं धरिण्यै नमः ॥ सं सुधासिंधवे नमः ॥
रं रत्नद्वीपाय नमः ॥ मं मणिमंडपायनमः ॥ कं

कल्पवृक्षाय नमः ॥ स्वं स्वर्णवेदिकायै नमः ॥
रं रत्नसिंहासनाय नमः दक्षांसे ॥ धं धर्माय नमः
वामांसे ॥ ज्ञां ज्ञानाय नमः वामोरौ ॥ वं वैराग्याय
नमः दक्षोरौ ॥ ऐं ऐश्वर्याय नमः मुखे ॥ अं अधर्माय
नमः वामपार्श्वे ॥ अं अज्ञानाय नमः दक्षपार्श्वे ॥
अं अवैराग्याय नमः नाभौ ॥ अं अनैश्वर्याय
नमः हृदये ॥ अं अनंताय नमः उपर्य्युपरि
विन्यसेत् ॥ अं अंबुजाय नमः ॥ सं संविन्नालाय
नमः ॥ सं सर्वतत्त्वात्मकाय पद्माय नमः ॥ प्रं प्र २४
कृतिमयपत्रेभ्यो नमः ॥ विं विकारमयकेशरेभ्यो

नमः॥ पं पंचाशद्वर्णकर्णिकायै नमः॥ वं द्वादशक
लात्मने सूर्यमंडलाय नमः ॥ वं षोडशकलात्मने
चंद्रमंडलाय नमः॥सं सत्त्वात्मने नमः ॥ रं रजसे
नमः ॥ तं तमसे नमः ॥ आं आत्मने नमः ॥
अं अंतरात्मने नमः ॥ पं परमात्मने नमः ॥ ह्रां
दीप्तायै नमः ॥ ह्रीं सूक्ष्मायै नमः ॥ ह्रां विद्युता
यै नमः ॥ पीठमध्ये सर्वतोमुख्यै नमः ॥ तदु
परि नित्यपूजाचक्रं विधाय ॥ ॐ ब्रह्मविष्णु-
रुद्रांबिकात्मकाय सौरपीठात्मने नमः ॥ इति पी
ठन्यासः ॥ मूलेन प्राणायामत्रयं कृत्वा मूलेन

गा. ॥ व्यापकं कृत्वा ध्यायेत्॥मुक्ताविद्रुमहेमनीलधव- ॥ प.
२५ ॥ लच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटांत ॥ २
त्त्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयांकुशक
शां शुभ्रं कपालं गुणं शंखं चक्रमथारविंदयुगलं
हस्तैर्वहंतीं भजे। इति ध्यात्वा बहिः पूजोक्तरी-
त्या देवीं सौवर्णीं च संपूज्य गंधपुष्पधूपदीपनैवे
द्यतांबूलाद्युपचारान्प्रकल्प्य किंचिज्जपित्वा ॥
स्वागतं देवदेवेशि सन्निधौ मे महेश्वरि ॥ गृहा
ण मानसीं पूजां यथार्थपरिभाविताम् ॥ १ ॥ २५
दशधा मूलं जपित्वा जपं देव्याः करे समर्प्य

मनसा पुष्पांजलिं दत्त्वा क्षणं तदात्मकं विभाव्य
वरदाभयांकुशकशाकपालगुणशंखचक्राभयो
न्यादिमुद्राः प्रदर्शयेत् ॥ इति मानसी पूजा ॥
अथ बहिःपूजार्थमनुज्ञाप्य बहिःपूजां कुर्य्यात् ॥
स्ववामे अस्त्रक्षालितत्रिपदिकां निधाय तदु
परि अस्त्रक्षालितं कलशं निधाय शुद्धतायं मू
लेनापूर्य्य मूलेनाष्टकृत्वोऽभिमंत्र्य जातवेदसे
इत्यृचा त्र्यंबकमिति ऋचगायत्र्या च सकृदभि
मंत्र्य गंधपुष्पाभ्यां पूजयेत् ॥ इति कलशसं
स्थापनम् ॥ अथ सामान्यार्घ्यस्थापनविधिः ॥

गा. तत्रास्त्रक्षालितं ताम्रपात्रं निधाय मूलेनापूर्य्य प.
२६ मूलेनाष्टवारं संमंत्र्य गंधपुष्पाभ्यां पूजयेत् ॥ २
इति सामान्यार्घ्यस्थापनविधिः।पीठात्मनोर्मध्ये
चंदनेन कनिष्ठिकया त्रिकोणं षट्कोणं च
कृत्वा अग्नये हृदयाय नमः ॥ ईशानाय शिरसे
स्वाहा ॥ निर्ऋतये शिखायै वषट् ॥ वायवे कव
चाय हुम् ॥ अग्नये अस्त्राय फट् ॥ नेत्रत्रयाय
वौषट् ॥ पूर्वे अस्त्राय फट् ॥ सामान्यार्घ्यजले
न प्रोक्ष्य चंदनने पूजयेत् ॥ त्रिकोणे आधारं २६
स्थापयामि ॥ आं आधारशक्तिं स्थापयामि ॥

पृथिवीद्वीपं स्थापयामि ॥ तत्र पूजा ॥ अग्निमं
डलाय द्वादशकलात्मने नमः ॥ धुं धूम्रायै
नमः ॥ जं ज्वालिन्यै नमः ॥ विं विस्फुलिंगिन्यै
नमः ॥ सुं सुरूपायै नमः ॥ कं कपिलायै नमः॥
हं हव्यवाहनायै नमः ॥ कं कव्यवाहनायै
नमः ॥ इति आधार पूजा ॥ आधारोपरि अर्घ्यं
पात्रं संस्थाप्य पात्रोपरि पूजा ॥ अं अर्कमंड
लाय द्वादशकलात्मने नमः॥तं तापिन्यै नमः ॥
धुं धूम्रायै नमः ॥ मं मरीच्यै नमः ॥ जं ज्वा-
लिन्यै नमः ॥ रुं रुच्यै नमः॥ सुं सुमुखायै नमः॥

भों भोगदायै नमः ॥ विं विश्वायै नमः ॥ बों बो- प.
गा. धिन्यै नमः ॥ धां धारिण्यै नमः ॥ क्षं क्षमायै २
२७ नमः ॥ इत्यर्घ्यपात्रपूजा ॥ विलोममातृकामुच्चर
न् शुद्धजलमापूर्य॥ ॐ क्षं नमः ॥ प्रणवः सर्वत्र॥
ळं नमः ॥ हं नमः॥सं नमः॥ षं नमः ॥ शं नमः॥
वं नमः ॥ लं नमः ॥ रं नमः ॥ यं नमः ॥ मं
नमः ॥ भं नमः॥बं नमः॥ फं नमः ॥ पं नमः ॥ नं
नमः ॥ धं नमः ॥ दं नमः ॥ थं नमः ॥ तं नमः॥ २७
णं नमः ॥ ढं नमः ॥ डं नमः॥ठं नमः॥टं नमः ॥
ञं नमः ॥ झं नमः॥जं नमः॥छं नमः ॥चं नमः॥

ङं नमः॥घं नमः॥गं नमः ॥ खं नमः ॥ कं नमः॥
अः नमः ॥ अं नमः ॥ औं नमः ओं नमः ॥
ऐं नमः ॥ एं नमः ॥ ॡं नमः ॥ ऌं नमः ॥ ॠं
नमः ॥ ऋं नमः॥ऊं नमः ॥ उं नमः ॥ ईं नमः ॥
इं नमः ॥ आं नमः अं नमः ॥ तत्र पूजा ॥ सं
सोममंडलाय षोडशकलात्मने नमः ॥ अं अमृ
तायै नमः॥मं मानदायै नमः ॥ पूं पूषायै नमः॥
सं समृद्ध्यै नमः॥तुं तुष्ट्यै नमः ॥ पुं पुष्ट्यै नमः॥
रं रत्यै नमः ॥ज्यों ज्योत्स्नायै नमः ॥ श्रीं श्रियै
नमः ॥ कीं कीर्त्यै नमः ॥ अं अङ्गदायै नमः ॥

पूं पूर्णायै नमः ॥ १६ ॥ अंकुशमुद्रया तीर्थमा
वाह्य ॥ गंगे च यमुने चैव गोदावरि सरस्वति॥
नर्मदे सिंधु कावेरि जलेऽस्मिन्सन्निधौ भव ॥
योनिमुद्रां प्रदर्श्य धेनुमुद्रयाऽमृतीकृत्य शंख
मुद्रां प्रदर्श्य गंधादिभिः संपूज्य मूलेनाष्टवारम
भिमंत्र्य मत्स्यमुद्रयाच्छाद्यसामान्यार्घ्यजलेन
सिंचेत् ॥ आत्मतत्त्वाय नमः ॥ विद्यातत्त्वाय
नमः ॥ शिवतत्त्वायै नमः ॥ परो रजसे सावदो
मिति सप्तकृत्वोऽभिमंत्र्य तज्जलदेवतात्मैक्यं
विभाव्य किंचित्पात्रांतरे गृहीत्वा पूजोपकरण

सामग्रीमात्मानं च त्रिः प्रोक्षयेत् ॥ इतिविशेषा र्घ्यस्थापनविधिः ॥ अर्घ्यस्योत्तरे पात्रचतुष्टयं पाद्याचमनीयमधुपर्कार्थं संस्थाप्यसकृदभिमंत्र्य तोयेनापूर्य्य मूलेन त्रिवारमाभिमंत्र्यन्यासक्रमेण धर्मादीन्प्रोक्षणीरूपेण संपूज्य तस्मिन्पीठोपरि देवतां विभाव्य सर्वांगेषु पंचपुष्पांजलिं दत्त्वामू लाधारात्कुंडलीमुत्थाप्य द्वारे स्थित्वा तत्रपरमा त्मना संयोज्य तदुद्भूयाऽमृतधारया देवीं प्रीण यित्वा देवीं प्रसन्नांविभाव्य स्वस्मिन्देव्यात्मैक्यं विभाव्यासनादिदीपान्तानुपचारान्प्रकल्प्य ॥

बाह्यनैवेद्यं न देयमिति संप्रदायः शिवो भूत्वाशिवं प.
गा. यजेदिति वचनात् ॥ अथ पीठपूजा ॥ मं मंडू- २
२९ काय नमः ॥ कं कालाग्निरुद्राय नमः ॥ मुंमूलप्रकृ
त्यै नमः ॥ आं आधारशक्त्यै नमः ॥ कूं कूर्मायै
नमः ॥ अं अनंताय नमः ॥ वं वराहाय नमः ॥
धं धरित्र्यै नमः ॥ सुं सुधासिंधवे नमः ॥ रं रत्न
द्वीपाय नमः ॥ मं मणिमंडपाय नमः ॥ कं कल्प
तरवे नमः ॥ स्वं स्वर्णवेदिकायै नमः ॥ तदुपरि
रत्नसिंहासनाय नमः ॥ आग्नेयादिकोणेषु धं २९
धर्माय नमः ॥ ज्ञं ज्ञानाय नमः ॥ वं वैराग्याय

नमः ॥ अं ऐश्वर्याय नमः ॥ पूर्वादिदिक्षु अं अधर्मा
य नमः ॥ अं अज्ञानाय नमः ॥ अं अवैराग्याय
नमः ॥ अं अनैश्वर्याय नमः ॥ मध्ये । अं अनंताय
नमः ॥ अं अंबुजाय नमः ॥ आं आनंदाय नमः ॥
सं संविन्नालाय नमः ॥ सं सर्वतत्त्वात्मकपद्माय
नमः ॥ पं प्रकृतिमयपत्रेभ्यो नमः ॥ विं विकार
मयकेशरेभ्यो नमः ॥ पं पंचाशद्वर्णकर्णिकायै
नमः ॥ अं द्वादशकलात्मने वह्निमंडलाय न
मः ॥ सं सत्त्वाय नमः ॥ रं रजसे नमः ॥ तं तमसे न
मः ॥ आं आत्मने नमः ॥ अं अंतरात्मने नमः ॥

गा. कं कालात्मने नमः ॥ एतान्युपर्युपरि ॥ अथ १.
३० पीठपूजा ॥ पीठस्य पूर्वभागे रां दीप्तायै नमः ॥ २
रीं सूक्ष्मायै नमः ॥ रूं भद्रायै नमः ॥ रैं विभूत्यै
नमः ॥ रौं विमलायै नमः ॥ रः अमोघायैनमः॥
रां विद्युतायैनमः ॥ पीठमध्ये । परदेवतायै नमः ॥
सर्वतो मुख्यै नमः ॥ तदुपरि बिंदुत्रिकोणावृत्तद
लाष्टकरेखात्मकं चतुरस्रं चतुर्द्वारोपशोभितं यंत्रं
संस्थाप्य ब्रह्मविष्णुरुद्रबिंबात्मकसौरपीठाय न
मः ॥ इति पीठं पूजयेत् ॥ इति पूजा समाप्ता ॥ ३०
अथ पूर्वोक्तऋष्यादिन्यासं कृत्वा प्राणानायम्य

मूलेनव्यापकंगायत्र्युच्चारपूर्वकं हस्ताभ्यां पुष्पांज
लिं गृहीत्वा नासारंध्रेण पुष्पसंचयकल्पितयंत्रम
ये कल्पितमूर्तिं निःक्षिप्य तत्तत्स्थानगतानि आ
वरणानि ध्यात्वा आवाहनादिमुद्राः प्रदर्श्यावाह
नं सन्निधापनं सन्निरोधनं सम्मुखीकरणम् अव
गुंठनं संकलीकरणं चेति । मूलांते श्रीगा
यत्रि देवि इहावाहिता भव पुष्पेण देव्या
हृदिकरं निधाय आं ह्रीं क्रौं इति द्वादशवारं
जपेत् । ततो भूतशुद्धिं प्राणप्रतिष्ठां विधाय
पूजयेत् ॥ नमः इतिमंत्रेण देव्याः पादांबुजे पाद्यं

गा. दद्यात् । स्वाहेति मंत्रेण मूर्ध्न्यर्घ्यं वमिति मंत्रेण प.
३१ मुखेआचमनम् ततः स्नानशालायांसुगंधिसलि २
लैःस्नापयित्वा मूलेन शतसंख्येन वा राजोपचारैः
स्नापयित्वांगप्रोक्षणं कृत्वा मूलेन पीठं संस्थाप्य
पूर्वोक्तां ध्यात्वा पंचोपचारैः सम्पूज्य देवतां प्र
सन्नां विभाव्य आवरणपूजां कुर्य्यात् ॥ तत्र
मध्ये त्रिकोणे व्याहृत्यै नमः ॥ अथ कोणे
गायत्र्यै नमः ॥ नैर्ऋत्यकोणे सावित्र्यै नमः ॥
वायव्यकोणे सरस्वत्यै नमः ॥ त्रिकोणांत ३१
रालेषु ब्रह्मणे नमः ॥ विष्णवे नमः ॥ रुद्राय नमः ॥

मूलेन पुष्पांजलिं गृहीत्वा ॥ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ॥ भक्त्या समर्पये तुभ्यं प्रथमावर्णार्चनम् ॥ अनेन पुष्पांजलिं दत्त्वा द्वितीयावरणं पूजयेत् ॥ अष्टदलेषु पूर्वादि दिक्षु ॐ आदित्याय नमः॥भानवे नमः॥भास्कारायनमः॥रवये नमः ॥ आग्नेयादिकेशरेषु ॥ उषायै नमः ॥ प्रभायै नमः प्रजायै नमः ॥ संध्यायै नमः ॥ मूलमुच्चरन् अभीष्टसिद्धिं मे देहीति पुष्पांजलिं दद्यात् ॥ इतिद्वितीयावरणम् ॥ अथ तृतीयम् ॥ हृदि ब्रह्मणे नमः॥हृदयाय नमः ईशाने रुद्रायशि

गा.
३२

खायै वषट् ॥ नैर्ऋत्ये ईश्वराय कवचाय हुम् ॥ १.
वायव्ये सदाशिवाय नेत्रत्रयाय वौषट् ॥ आग्ने २
ये सर्वात्मने अस्त्रायफट् ॥ तत्तद्देवताभ्यो नमः॥
मूलेन ॥ अभीष्ट० ॥ इति तृतीयावरणम् ॥ अथ
चतुर्थम् ॥ तद्बहिः पूर्वाद्यष्टदलेषु ॥ अमृतायै
नमः ॥ नित्यायै नमः ॥ विश्वंभरायै नमः ॥
ईशान्यै नमः ॥ प्रभायै नमः ॥ जयायै नमः ॥
विजयायै नमः ॥ शांत्यै नमः॥मूलेन पुष्पांजलिं
अभीष्टसिद्धिं० ॥ इति चतुर्थावरणम् ॥ अथ ३२
पंचमम् ॥ तद्बहिः पूर्वाद्यष्टदिक्षु॥ॐ कांत्यै नमः॥

दुर्गायै नमः ॥ सरस्वत्यै नमः ॥ विद्यारूपायै नमः ॥ विशालायै नमः ॥ ईशानायै नमः ॥ वायव्यै नमः ॥ विमलायै नमः ॥ मूलमुच्चरन्न भीष्टसिद्धिमिति पुष्पांजलिं दद्यात् ॥ इति पंचमावरणम् ॥ अथ षष्ठम् ॥ पूर्वाद्यष्टदिक्षु ॥ संहारिण्यै नमः ॥ सूक्ष्मायै नमः ॥ विश्वयोन्यै नमः ॥ जयावहायै नमः ॥ पद्मालयायै नमः ॥ परायै नमः ॥ शोभायै नमः ॥ रूपायै नमः ॥ मूलेन पुष्पांजलिम् अभीष्टसिद्धिं० ॥ इति षष्ठा वरणम ॥ अथ सप्तमम् ॥ पूर्वाद्यष्टदिक्षु ॥ ॐ आं

ब्राह्म्यै नमः ॥ ॐ ईं माहेश्वर्यै नमः ॥ ॐ ऊं कौ
मार्यै नमः॥ ॐ ॠं वैष्णव्यै नमः॥ ॐ ॡं वाराह्यै न
मः ॥ ॐ औं चामुंडायै नमः॥ ॐ अः चंडिकायै
नमः ॥ मूलमुच्चार्य अभीष्ट० पुष्पांजलिं दद्यात
इति सप्तमावरणम् ॥ अथाष्टमावरणम् ॥तद्बहिः
पूर्वाद्यष्टदिक्षु ॥ ॐ सों सोमाय नमः ॥ ॐ बुं
बुधाय नमः॥ॐ शुं शुक्राय नमः॥ॐ भौं भौमा
य नमः ॥ ॐ शं शनैश्चराय नमः॥ॐ रां राहवे
नमः॥ॐ कें केतवे नमः ॥ मूलेन अभीष्ट० पुष्पां
जलिं दद्यात ॥ इत्यष्टमावरणम् ॥ अथ नवमम् ॥

पूर्वाद्यष्टदिक्षु ॥ ॐ लं इंद्राय नमः ॥ॐ रं अग्नये
नमः॥ॐ यं यमाय नमः ॥ॐ क्षं नैर्ऋत्यै नमः ॥
ॐ वं वरुणाय नमः ॥ ॐ यं वायवे नमः॥ ॐ सं
सोमाय नमः ॥ ॐ ईं ईशानाय नमः ॥ ॐ ब्रह्मणे
नमः॥ॐ अनंताय नमः ॥ मूलेन अभीष्ट० पुष्पां
जलिं दद्यात॥ इति नवमावरणम्॥ अथ दशमम् ॥
ॐ वं वज्राय नमः ॥ ॐ शं शक्तये नमः॥ ॐ दं
दंडाय नमः ॥ ॐ खं खड्गाय नमः ॥ ॐ पं पा
शाय नमः ॥ ॐ गं गदायै नमः ॥ ॐ त्रिं
त्रिशूलाय नमः ॥ ॐ चं चक्राय नमः ॥

ॐ अं अंबुजाय नमः ॥ मूलेन अभीष्ट०
पुष्पांजलिं दद्यात् ॥ इति दशमावरणम् ॥
पुनः पंचोपचारैः संपूज्य नीराजनं पुष्पांजलिं
दत्त्वा यस्य स्मृत्येति पूजां समर्प्य जपफलं
देव्याः करे समर्प्य पुष्पांजलिं दत्त्वा क्षमाप्य स्वहृ
दि उद्वास्य पुनर्ऋष्यादि न्यासं कृत्वा निर्माल्यं वि
सृजेत् ॥ इति नित्यपूजापद्धतिः समाप्ता ॥ अथ
नैमित्तिकमाह ॥ गुरुजन्मदिवसे स्वजन्मदिवसे ज
न्मनक्षत्रे विद्याप्राप्तिदिवसे पूर्णायां व्यतीपाते वा
विशेषं पूजयेत् ॥ इति नैमित्तिकम् ॥ अथ पुरश्च

रणविधिः ॥ कर्ता स्वशक्त्या गुरुं संपूज्य तदनु
ज्ञया देहशुद्ध्यर्थं चांद्रायणं प्राजापत्यं वा समा
चरेत् । पुरश्चरणदिवसे सुगंधसलिलैः स्नात्वा पू
जाप्रदेशे चतुरस्रं चतुर्द्वारं मंडपं विधाय हृष्टधी
र्वाङ्नियमितो मिताहारो जितेंद्रियः प्रातरारभ्या
मध्याह्नं जपेत । एवं च चतुर्विंशतिलक्षं जपेत् ॥
तदुक्तम् ॥ उक्तलक्षविधानेन कृत्वा विप्रा जिते
न्द्रियाः॥ क्षीरौदनं तिलं दूर्वांक्षीरद्रुमसमिद्गमान्॥
अष्टद्रव्येण च पृथक्सहस्रत्रितयं हुनेत् ॥ मंत्र
फलसिद्ध्ये जपदशांशहोमः ॥ तद्दशांशेन तर्प

णम् ॥ तद्दशांशेन मार्जनम् ॥ तद्दशांशेन ब्राह्मण
भोजनम् ॥ इति पुरश्चरणविधिः ॥ अथका
म्यमुच्यते ॥ विद्यार्थी वाग्भवाद्यां लक्ष्मी
कामः श्रीबीजं वश्यार्थे कामबीजं सर्व
कामार्थे मायाबीजम् आयुःकामार्थे मृत्युंजय
चतुरक्षरीसहितं जपेत्॥इतिका० विधिः ॥ तत्त्व
संख्यासहस्राणि समंत्रं जुहुयात्तिलैः ॥ सर्वपाप
विनिर्मुक्तो दीर्घमायुश्च विंदति ॥ आयुष्यं सा
ज्यहविषा केवलेनाथ सर्पिषा ॥ पर्वांकितैस्ति
लैर्मंत्री जुहुयात्त्रिसहस्रकम् ॥ अरुणाक्षैस्त्रिम

ध्वाज्यैः प्रसूनैर्ब्रह्मवृक्षजैः ॥ बहुना किमिहोक्तेन
यथावत्साधु साधिता ॥ द्विजन्मनामियं विद्या
सिद्धकामदुहा स्मृता ॥ इति गायत्रीपद्धतिः
संपूर्णा ॥ ॥ छ ॥

## अथ गायत्र्युपनिषत् ॥

नमस्कृत्य भगवान् याज्ञवल्क्यः स्वयं परिपृच्छ
ति त्वं ब्रूहि भगवन् गायत्र्या उत्पत्तिं श्रोतुमि
च्छामि ॥ ब्रह्मोवाच ॥ प्रणवेन व्याहृतयः प्रवर्त
ते तमसस्तु परं ज्योतिष्कः पुरुषः स्वयम् ॥
भूर्विष्णुरिति ह ताः स्वांगुल्या मथेत् । मथ्यमा

नात्फेनो भवति फनाद्बुद्बुदो भवति बुद्बुदादंडं
भवति अंडवानात्मा भवति आत्मनः आका
शो भवति आकाशाद्वायुर्भवति वायोरग्निर्भवति
अग्नेरोंकारो भवति ॐकाराद्व्याहृतिर्भवति व्या
हृत्या गायत्री भवति गायत्र्याः सावित्री
भवति सावित्र्याः सरस्वती भवति सरस्व
त्या वेदा भवंति वेदेभ्यो ब्रह्मा भवति
ब्रह्मणो लोका भवंति तस्माल्लोकाः प्रव
र्त्तंते चत्वारो वेदाः सांगाः सोपनिषदः सेतिहा
सास्ते सर्वे गायत्र्याः प्रवर्त्तंते यथाग्निर्देवानां ब्रा

हंसो मनुष्याणां मेरुः शिखरिणां गंगा नदीनां
वसंत ऋतूनां ब्रह्मा प्रजापतीनामेवासौ मुख्यः
गायत्र्या गायत्री छंदो भवति किं भूः किं भुवः
किं स्वः किं महः किं जनः किं तपः किं सत्यं
किं तत् किं सवितुः किं वरेण्यं किं भर्गः किं देव
स्य किं धीमहि किं धियः किं यः किं नः किं प्रचो
दयात् । भूरिति भूर्लोकः भुव इत्यंतरिक्षलोकः
स्वरिति स्वर्लोकः मह इति महर्लोकः जन इति
जनो लोकः तप इति तपो लोकः सत्यमिति स
त्यलोकः ॥ भूर्भुवः स्वरोमिति त्रैलोक्यम् ॥

तदसौ तेजः यत्तेजसोग्निर्देवता सवितुरित्या
दित्यस्य वरेण्यमित्यन्नम् ॥ अन्नमेव प्रजापतिः
भर्ग इत्यापः॥आपो वै भर्गः एतावत्सर्वा देवताः
देवस्येंद्रो वै देवयीद्देवं सदिंद्रस्तस्मात्सर्वंकृत
पुरुषो नाम विष्णुः । धीमहि किमध्यात्मं
तत्परमं पदमित्यध्यात्मं यो न इति पृथिवी
वै यो नः प्रचोदयात् काम इमाँल्लोकान्
प्रच्यवयन् यो नृशंस्योस्तोष्यस्तत्परमो धर्मः
इत्येषा गायत्री किंगोत्रा कत्यक्षरा कति ३७
पदा कतिकुक्षिः कतिशीर्षाणि ॥ सांख्यायन

सगोत्रा गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्
कुक्षिः सावित्री केशास्त्रयः पादा भवंति ॥ का
स्याः कुक्षिः कानि पंच शीर्षाणि ऋग्वेदोऽस्याः
प्रथमः पादो भवति यजुर्वेदो द्वितीयः सामवेद
स्तृतीयः पूर्वा दिक्प्रथमा कुक्षिर्भवति दक्षिणा
द्वितीया पश्चिमा तृतीया उदीची चतुर्थी
ऊर्ध्वा पंचमी अधरा षष्ठी कुक्षिः । व्याकरण
मस्याः प्रथमं शीर्षं भवति शिक्षा द्वितीयं क
ल्पस्तृतीयं निरुक्तं चतुर्थं ज्योतिषामयनं पंच
मम॥ किं लक्षणं किमु चेष्टितं किमुदाहृतं किमक्ष

गा. रं दैवत्यम् ॥ लक्षणं मीमांसा अथर्ववेदो विचे उ.
३८ ष्टितम् छंदोविधिरित्युदाहृतम् ॥ को वर्णः कः ३
स्वरः । श्वेतो वर्णः षट् स्वराणि इमान्यक्षराणि
दैवतानि भवंति पूर्वा भवति गायत्री मध्यमा
सावित्री पश्चिमा संध्या सरस्वती ॥ प्रातःसंध्या
रक्ता रक्तपद्मासनस्था रक्तांबरधरा रक्तवर्णा
रक्तगंधानुलेपना चतुर्मुखा अष्टभुजा द्विने
त्रा दंडाक्षमालाकमंडलुस्रुक्स्रुवधारिणी सर्वा
भरणभूषिता गायत्री कौमारी ब्राह्मी हंसवा ३८
हिनी ऋग्वेदसंहिता ब्रह्मदैवत्या त्रिपदा गायत्री

षट्कुक्षिः पंचशीर्षा अग्निमुखा रुद्रशिवविष्णु
हृदया ब्रह्मकवचा सांख्यायनसगोत्रा भूर्लोक
व्यापिनी अग्निस्तत्त्वम् उदात्तानुदात्तस्वरितस्वर
मकारः आत्मज्ञाने विनियोगः ॥ इत्येषा गायत्री
॥ मध्याह्नसंध्या श्वेता श्वेतपद्मासनस्था श्वेतांबर
धरा श्वेतगंधानुलेपना पंचमुखी दशभुजा त्रिने
त्रा शूलाक्षमालाकमंडलुकपालधारिणी सर्वाभर
णभूषिता सावित्री युवती माहेश्वरी वृषभवाहि
नी यजुर्वेदसंहिता रुद्रदेवत्या त्रिपदा सावित्री
षट्कुक्षिः पंचशीर्षा अग्निमुखा रुद्रशिखा ब्रह्म

गा. कवचा भारद्वाजसगोत्रा भुवर्लोकव्यापिनी वा उ.
३१ युस्तत्त्वम् उदात्तानुदात्तस्वरितस्वरमुकारः श्वेत ३
वर्णः आत्मज्ञाने विनियोगः ॥ इत्येषा सावित्री॥
सायंसंध्या कृष्णा कृष्णपद्मासनस्था कृष्णांबर
धरा कृष्णवर्णा कृष्णगंधानुलेपना कृष्णमाल्यां
बरधरा एकमुखी चतुर्भुजा द्विनेत्रा शंखचक्र
गदापद्मधारिणी सर्वाभरणभूषिता सरस्वती वृद्धा
वैष्णवी गरुडवाहिनी सामवेदसंहिता विष्णुदेव
त्या त्रिपदा षट्कुक्षिः पंचशीर्षा अग्निमुखा विष्णु ३१
हृदया रुद्रशिखा ब्रह्मकवचा काश्यपसगोत्रा स्व

लोंकव्यापिनी सूर्यस्तत्त्वम् उदात्तानुदात्तस्वरित
मकारः कृष्णवर्णो मोक्षज्ञाने विनियोगः इत्येषासर
स्वती ॥ रक्ता गायत्री श्वेता सावित्री कृष्ण
वर्णा सरस्वती ॥ प्रणवो नित्ययुक्तश्च व्याहृतीषु
च सप्तसु ॥ सर्वेषामेव पापानां संकरे समुप
स्थिते ॥ दश शतं समभ्यर्च्य गायत्री पावनी
महत् ॥ प्रह्लादोऽत्रिर्वशिष्ठश्च शुकः कण्वः पराशरः
विश्वामित्रो महातेजाः कपिलः शौनका
महान् ॥ याज्ञवल्क्यो भरद्वाजो जमदग्निस्तपो
निधिः ॥ गौतमो मुद्गलः श्रेष्ठो वेदव्यासश्चलो

गा.
०६

मशाः॥अगस्त्यः कौशिको वत्सः पुलस्त्या मांडु
कस्तथा ॥ दुर्वासास्तपसा श्रेष्ठो नारदः कश्य
पस्तथा ॥ उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या
सुपूर्विका ॥ गायत्र्युष्णिगनुष्टुप्चबृहती पंक्तिरेव
च ॥ त्रिष्टुप् च जगती चैव तथातिजगती
मता ॥ शक्करी सातिपूर्वा स्यादष्ट्यत्यष्टी तथै
व च॥धृतिश्चातिधृतिश्चैव प्रकृतिः कृतिराकृतिः॥
विकृतिः संकृतिश्चैव तथातिकृतिरुत्कृतिः ॥
इत्येताश्छंदसां संज्ञाः क्रमशो वच्मि सांप्रतम् ॥ ४०
भूरिति च्छंदो भुव इति च्छंदः स्वरिति च्छंदो

भूर्भुवः स्वरोमिति देवी गायत्री इत्येता
नि च्छंदांसि प्रथममाग्नेयं द्वितीयं प्राजापत्यं
तृतीयं सौम्यं चतुर्थमैशानं पंचमामादित्यं षष्ठं
बार्हस्पत्यं सप्तमं पितृदेवत्यमष्टमं भगदेवत्यं न
वममार्यमं दशमं सावित्रमेकादशं त्वाष्ट्रं द्वादशं
पौष्णं त्रयोदशमैन्द्राग्न्यं चतुर्दशं वायव्यं पंच
दशं वामदेवत्यं षोडशं मैत्रावरुणं सप्तदशमां
गिरसमष्टादशं वैश्वदेव्यमेकोनविंशं वैष्णवं विंशं
वासवमेकविंशं रौद्रं द्वाविंशमाश्विनं त्रयोविंशं
ब्राह्मं चतुर्विंशं सावित्रम ॥ दीर्घान्स्वरेण

गा. संयुक्तान्बिन्दुनादसमन्वितान् ॥ व्यापका उ.
४१ न्विन्यसेत्पश्चाद्दशपंक्त्यक्षराणिच ॥ ढबुंपुस २
इति प्रत्यक्षबीजानि ॥ प्रह्लादिनी प्रभा सत्या वि
श्वा भद्रा विलासिनी ॥ प्रभावती जया कांता
शांता पद्मा सरस्वती ॥ विद्रुमस्फटिकाकारं
पद्मरागसमप्रभम् ॥ इंद्रनीलमणिप्रख्यं मौक्ति
कं कुंकुमप्रभम् ॥ अञ्जनाभं च गांगेयं वैदूर्यं
चंद्रसन्निभम् ॥ हारिद्रं कृष्णदुग्धाभं रविकांतिस
मं भवम् ॥ शुकपिच्छसमाकारं क्रमेण परिकल्प ४१
येत ॥ पृथिव्यापस्तथा तेजो वायुराकाश एव च

॥ गंधो रसश्च रूपं च शब्दः स्पर्शस्तथैव च ॥ घ्राणं जिह्वा च चक्षुश्च त्वक्छ्रोत्रं च तथापरम् ॥ उपस्थपायुपादादि पाणिर्वागपि च क्रमात् ॥ मनो बुद्धिरहंकारमव्यक्तं च यथाक्रमम् ॥ सुमुखं संपुटं चैव विततं विस्तृतं तथा ॥ एकमुखं च द्विमुखं त्रिमुखं च चतुर्मुखम् ॥ पंचमुखं षण्मुखं चाधोमुखं चैव व्यापकम् ॥ अंजलीकं ततः प्रोक्तं मुद्रितं तु त्रयोदशम् ॥ शकटं यमपाशं च ग्रंथितं संमुखोन्मुखम् ॥ प्रलंबं मुष्टिकं चैव मत्स्यः कूर्मो वराहकम् ॥ सिंहाक्रां

गा. तं महाक्रांतं मुद्गरं पल्लवं तथा ॥ एता मुद्राश्च उ.
४२ तुर्विंशद्गायत्र्याः सुप्रतिष्ठिताः ॥ ॐ मूर्ध्नि संघाते ३
ब्रह्मा विष्णुर्ललाटे रुद्रो भ्रूमध्ये चक्षुषोश्चंद्रा
दित्यौ कर्णयोः शुक्रबृहस्पती नासिके वायुदैवत्यं
प्रभातं दोषा उभे संध्ये मुखमग्निर्जिह्वा सरस्व
ती ग्रीवा स्वाध्यायास्तनयोर्वसवः बाह्वोर्मरुतः
हृदयं पर्जन्यमाकाशमपरं नाभिरंतरिक्षं कटि
रिंद्रियाणि जघनं प्राजापत्यं कैलासमलयौ
ऊरू विश्वेदेवा जानुभ्यां जान्वोः कुशिकौ ४२
जंघयोरयनद्वयं खुराः पितरः पादौ पृथिवी

वनस्पतिः गुल्फौ रोमाणि मुहूर्तास्ते विग्रहाः केतु
मासा ऋतवः संध्याकालत्रयमाच्छादनं संव
त्सरो निमिषः अहोरात्रादित्यश्चंद्रमाः सहस्रप
रमां देवीं शतमध्यां दशापराम् ॥ सहस्रनेत्रीं
देवीगायत्रीं शरणमहं प्रपद्ये ॥ तत्सवितुर्वरदाय
नमः तत्प्रातरादित्याय नमः ॥ सायमधीयानो
दिवसकृतं पापं नाशयति प्रातरधीयानो रात्रि
कृतं पापं नाशयति तत्सायं प्रातः प्रयुंजानो
अपापो भवति य इदं गायत्रीहृदयं ब्राह्मणः प्रय
तः पठेत् चत्वारो वेदा अधीता भवंति सर्वेषु ती

गा. तं महाक्रांतं मुद्गरं पल्लवं तथा ॥ एता मुद्राश्च उ.
४२ तुर्विंशद्गायत्र्याः सुप्रतिष्ठिताः ॥ ॐ मूर्ध्नि संघाते ३
ब्रह्मा विष्णुर्ललाटे रुद्रो भ्रूमध्ये चक्षुषोश्चंद्रा
दित्यौ कर्णयोः शुक्रबृहस्पती नासिके वायुदैवत्यं
प्रभातं दोषा उभे संध्ये मुखमग्निर्जिह्वा सरस्व
ती ग्रीवा स्वाध्यायास्तनयोर्वसवः बाह्वोर्मरुतः
हृदयं पर्जन्यमाकाशमपरं नाभिरंतरिक्षं कटि
रिंद्रियाणि जघनं प्राजापत्यं कैलासमलयौ
ऊरू विश्वेदेवा जानुभ्यां जान्वोः कुशिकौ ४२
जंघयोरसनत्तयम् सुराः पितरः पादौ पृथिवी

वनस्पतिः गुल्फौ रोमाणि मुहूर्तास्ते विग्रहाः केतु
मासा ऋतवः संध्याकालत्रयमाच्छादनं संव
त्सरो निमिषः अहोरात्रादित्यश्चंद्रमाः सहस्रप
रमां देवीं शतमध्यां दशापराम् ॥ सहस्रनेत्री
देवीगायत्री शरणमहं प्रपद्ये ॥ तत्सवितुर्वरदाय
नमः तत्प्रातरादित्याय नमः ॥ सायमधीयानो
दिवसकृतं पापं नाशयति प्रातरधीयानो रात्रि
कृतं पापं नाशयति तत्सायं प्रातः प्रयुंजानो
अपापो भवति य इदं गायत्रीहृदयं ब्राह्मणः प्रय
तः पठेत् चत्वारो वेदा अधीता भवंति सर्वेषु ती

थेषु स्नातो भवति सर्वैर्देवैर्ज्ञातो भवति सर्वप्रति
प्रत्यूहात्पूतो भवति अपेयपानात्पूतो भवति
अभक्ष्यभक्षणात्पूतो भवति अलेह्यलेहात्पूतो
भवति अचोष्यचोषणात्पूतो भवति ॥ सुरापा
नात्पूतो भ० ॥ सुवर्णस्तेयात्पूतो भव० ॥ पंक्ति
भेदनात्पूतो भ० ॥ पतितसंभाषणात्पूतो भ० ॥
अनृतवचनात्पूतो भ० ॥ गुरुतल्पगमनात्पूतो
भ० ॥ अगम्यागमनात्पूतो भ० ॥ वृषलीगम
नात्पूतो भ०॥ ब्रह्महत्यायाः पूतो०॥ भ्रूणहत्यायाः
पूतो० ॥ वीरहत्यायाः पूतो० ॥ अब्रह्म

चारी सुब्रह्मचारी भवति ॥ अनेन हृदयेनाधीतेन
क्रतुशतेनेष्टं भवति षष्टिसहस्रगायत्रीजप्यानि
भवंति ॥ अष्टौ ब्राह्मणान्ग्राहयेत अर्थसिद्धिर्भ
वति ॥ य इदं गायत्रीहृदयं ब्राह्मणः प्रयतः पठेत् ॥
सर्वपापैः प्रमुच्यते ब्रह्मलोके महीयते ब्राह्मलोके
महीयत इति ॥ इति गायत्र्युपनिषत्संपूर्णा ॥

अथ गायत्रीतत्त्वप्रारम्भः ॥

श्रीगणेशाय नमः ॥ श्रीगायत्र्यै नमः ॥

श्रीगायत्रीतत्त्वमालामंत्रस्य विश्वामित्र ऋषिः ॥
अनुष्टुप् छन्दः ॥ परमात्मा देवता । हलो बीजानि

स्वराः शक्तयः ॥ अव्यक्तं कीलकम् ॥ मम
समस्तपापक्षयार्थे गायत्रीतत्त्वपाठे विनियोगः॥
चतुर्विंशतितत्त्वानां यदेकं तत्त्वमुत्तमम् ॥ अनु
पाधि परं ब्रह्म तत्परं ज्योतिरोमिति ॥ १ ॥ यो
वेदादौ स्वरः प्रोक्तो वेदांते च प्रतिष्ठितः ॥ तस्य
प्रकृतिलीनस्य तत्परं ज्योतिरोमिति ॥ २ ॥ तत्स
दादिपदैर्वाच्यं परमं पदमव्ययम् । अभेदत्वं
पदार्थस्य तत्परं ज्योतिरोमिति ॥ ३ ॥ यस्य मा
यांशभागेन जगदुत्पद्यतेऽखिलम् ॥ तस्य सर्वोत्तमं
रूपमस्मयाभिधीमहि ॥ ४ ॥ यं न पश्यन्ति

